छायातपौ जीवशिवावसौ गुरुः
शिवोऽस्य शिष्यः खलु जीवसंज्ञिकः ।
लिङ्गं परं हृद्गगनं तदङ्गकं
प्राणानिलोऽयं शिवसूत्रमुच्यते ॥ ३१ ॥

अनुभवसूत्रं सूत्रं शिवसिद्धान्तसंज्ञिकं तन्त्रम् ।
लिङ्गं षट्स्थलपरमब्रह्मैवेत्यत्र धारयेत्सततम् ॥ ३२ ॥

इत्युक्त्वा पुरुषस्यास्य देशिकः करुणाबलात् ।
चक्रे दीक्षां महाशैवीमविद्यापाशकृन्तनीम् ॥ ३३ ॥

दीयते लिङ्गसम्ब[1]न्धः[1] क्षीयते च मलत्रयम् ।
दीयते क्षीयते य[2]स्मात् सा[2] दीक्षेति निगद्यते ॥ ३४ ॥

सा दीक्षा परमा शैवी त्रिधा भवति निर्मला ।
एका वे[3]ध[3]ात्मिका साक्षादन्या मन्त्रात्मिका मता ॥ ३५ ॥

क्रियात्मिका परा काचित् एवमेव त्रिधा भवेत् ।
हस्तमस्तकसंयो[4]गात् छ[4]लाद्वे[5]धे[5]ति गीयते ॥ ३६ ॥
गुरुणोदीरिता कर्णे या सा [6]मान्त्री[6]ति कथ्यते ।
शिष्यपाणितले दत्ता या दीक्षा सा क्रि[7]योच्यते[7] ॥ ३७ ॥

पाशानशेषान् क[8]र्तर्या[8] छित्वा लिङ्गं समादिशेत् ।
कर्तरी शिवदीक्षा स्यात् यथा पाशान् छिनत्त्यसौ ॥ ३८ ॥

---

[1] न्धं (अ). [2] स्मात्सा (अ, क). [3] दा (अ, क). [4] गाच्छ (अ, य, क्ष). [5] दे (अ). [6] मन्त्रेति (अ, क). [7] क्रियात्मजा (अ). [8] र्त्र्यै (अ).

कृत्वा शैवीं परां दीक्षां दत्वा वि[1]द्यां[1] शिवात्मिकाम् ।
छित्वाऽविद्याम[2]हा[2]पाशं कला[3]ध्वा[3]नं विचिन्तयेत् ॥ ३९ ॥

यथा कला तथा भावो यथा भावस्तथा मनः ।
यथा मनस्तथा दृष्टिः यथा दृष्टिस्तथा स्थलम् ॥ ४० ॥

सा कला परमा [4]सूक्ष्मा तत्वानां[4] बो[5]धिनी[5] मता ।
तामाकृष्य यथान्यायं लिङ्गे समुप[6]वे[6]शयेत् ॥ ४१ ॥

[7]सा[7] बाह्याभ्यन्तरं साक्षात् लिङ्गं ज्योतिः परं स्वकम् ।
तिले तैलमिवाभा[8]ति ह्य[8]रण्यामिव पावकः ॥ ४२ ॥

क्षीरे सर्पिरिव स्रोतस्यम्बुवत् स्थि[9]त[9]मात्मनि ।
तद्भा[10]व[10]लक्षणां भक्तिं सुसू [11]क्ष्मां परमामपि[11] ।
दर्शयामास शिष्यस्य *देशिकः* परमेश्वरः ॥ ४३ ॥

तस्मिन् दृष्टे परे लिङ्गे [12]नेष्क[12]ले निरुपाधिके ।
अस्य जीवस्य कर्माणि क्षीयन्ते सक[13]लानि वै[13] ॥ ४४ ॥

†अविद्याहृदयग्रन्थिर्भिद्यते शतधापि च ।
संशया बहुसङ्कल्पाश्छिद्यन्ते च सहस्रधा† ॥ ४५ ॥

---

1 द्या (क). 2 दे (क). 3 ध्या (क). 4 सूक्ष्मा मन्त्राणां (अ). साक्षात् तत्वानां (क). 5 धवी (क). 6 दे (अक). 7 स (अ). 8 तम (अ, क). 9 त (अ, क्ष). 10 ग (क). 11 क्ष्मं परम् (क). 12 निःक (अ). 13 लैस्तथा (क), कलानि हि (क्ष).

---

* अयं भागः 'क' पुस्तके त्रुटेताताळे लुप्तः ।

† एतच्चिह्नान्तर्गतोऽर्धश्लोकः 'क' पुस्तके नास्ति ।

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिः तद्यदात्मविदो विदुः ॥ ४६ ॥

ततस्तल्लिङ्गमस्याङ्गे शिष्यस्यामिततेजसः ।
गुरुस्संयोजयामास पूर्वोक्तेनैव वर्त्मना ॥ ४७ ॥

तनुत्रयगतानादिमलत्रयमसौ गुरुः ।
दीक्षात्र[1]येण[1] निर्द[2]ग्ध्वा[2] लिङ्गत्रयमुपादि[3]शे[3]त् ॥ ४८ ॥

यथा पुरत्रयं दग्धं युगपत्पुरवैरिणा ।
तथा मलत्रयं [4]द[4]ग्धं युगपद्देशिकात्मना ॥ ४९ ॥

वेधा मन्[5]त्र[5]क्रियाका[6]रा[6] दीक्षा शैवी शिखा मता ।
त[7]च्छिखा[7] लिङ्गमित्युक्तं कर्ममायाणुवासना ॥ ५० ॥

रूपं कर्पूरमाख्यातं तद्गुन्धं [8]चाङ्गमी[8]रितम् ।
एतल्लिङ्गाङ्गसंयो[9]ग:[9] शिखिकर्पूरयोगवत् ॥ ५१ ॥

त्रिष्वङ्गेष्वस्य शिष्यस्य लिङ्गत्रयमयं गुरुः ।
संयुयोज त्रिधाभूतपरदीक्षाबलेन तु ॥ ५२ ॥

योगाङ्गे भावलिङ्गं तु वेधा दीक्षाबलेन वै ।
मन्त्रदीक्षाबलेनैव भोगाङ्गे प्राणलिङ्गकम् ॥ ५३ ॥
क्रियादीक्षाबलेनायं देशिक[10]स्तस्त्य[10]चिद्ध[11]नम्[11] ।
इष्टलिङ्गं तथा चैव त्यागाङ्गे समयोज[12]य[12]त् ॥ ५४ ॥

---

[1] न (अ). [2] ह्य (अ). [3] श (क्ष). [4] ध (अ). [5] मनु (य, क्ष). [6] र (अ क). [7] च्चैको (क). [8] न्धोऽङ्गमिती (य, क्ष). [9] ग (अ). [10] स्सत्य (अ, क). [11] नः (अ; क, ). [12] ये (य, क्ष).

योगाङ्गमात्म[1]नो[1]ङ्गत्वात् कारणाङ्गमितीरितम् ।
भोगाङ्गमन्तरङ्गत्वात् सूक्ष्माङ्गमिति [2]निश्चि[2]तम् ॥ ५३ ॥
त्यागाङ्गं बहिरङ्गत्वात् स्थूलाङ्गमिति की[3]र्तितम्[3] ।

*जीवात्मा विश्व एव स्यात् अन्तरात्मा तु तैज[4]सः[4] ।
परमात्मा भवेत्प्राज्ञः इति तत्वविदो विदुः* ॥ ५४ ॥

विश्वो जाग्रदवस्थायां स्वप्नाख्यायां तु तैज[5]सः[5] ।
प्राज्ञः सुषुप्त्यवस्थायां लिङ्गत्रयमुपासते ॥ ५५ ॥

एकोऽयं पुरु[6]षो[6] विश्व[7] तै[7]ज[8]स[8]प्राज्ञरूपतः ।
सदा स्वा[9]ङ्गेषु[9] संयु[10]क्त[10]मुपास्ते लिङ्गमद्वयम् ॥ ५६ ॥

†उपासनैव संयोगः संयोगो द्वैतसंलयः ।
द्वैतस्य विलयश्चैव निवृत्तिः परिकीर्तिता ॥
निवृत्तिस्सैव विश्रान्तिर्विश्रान्तिः परमं [11]सुखम्[11] ॥
स्फटिकस्वच्छयोर्दीपप्रभयोः [12]करकाम्भसोः[12] ॥ ५७ ॥
कर्पूरगन्धयोर्वायु[13]न[13]भसोर्भोगयोगवत् ॥†

एवं लिङ्गाङ्गसंयोगविधिना स्वात्मनि स्थिता ।
बीजरू[14]पा[14] परा भक्तिः प्ररोहति समन्ततः ॥ ५८ ॥

---

[1] स (अ). [2] संम (क). [3] त्यंते (अ). [4] सम् (क). [5] सम् (अ). [6] षं (क). [7] ते (य). [8] सः (अ, क). [9] ङ्गु (अ). [10] क्तो (अ). [11] पदम् (क, य, क्ष). [12] काश्मशाम्भवाः (क). [13] नं (अ). [14] प (अ)

---

* एतच्चिह्नान्तर्गतोऽयं श्लोकः 'अ' पुस्तके नास्ति ।

† एतच्चिह्नान्तर्गतः सार्धश्लोकद्वयभागः मुद्रितपुस्तकेषु ५७ सङ्ख्यात्वेन यथा परिगणितः तथैवात्रापि निविष्टः ।

आ[1]त्मा[1] क्षेत्रं भवेद्भक्तिः बीजं बीजी महेश्वरः ।
तस्मात् क्षेत्रस्य बीजस्य बीजि[2]नश्च[2] कदाचन ॥ ५९ ॥
वियोगो नेक्ष्यते क्वापि सदा संयोग एव हि ।
*अङ्गमात्मेति निर्णीतं लिङ्गं ब्रह्मेति निश्चितम् ।
अङ्गस्य हृदयं लिङ्गं लिङ्गस्य हृदयं [3]हि[3] तत् ॥
तयोः कथं वियोगस्स्यात् सदा संयोग एव हि ।
योगेन तु परा भक्तिः इति भक्तेस्तु वैभवम् ॥ ६० ॥*

अ[4]स्याः[4] स्वरूपमद्भावात् सद्भक्तिरिति कीर्तिता ।
[5]त[5]द्भक्त्यैव [6]तथा[6] चा[7]स्या[7] भक्तस्थलमुपागतम् ॥ ६१ ॥

†आचारलिङ्ग[8]संयु[8]क्तमङ्गं भक्तस्थलं महत् ।
तत्र स्थिता सती भक्तिः सम्पूर्णा निजनिष्ठया ॥
नैष्ठिकी भक्तिरित्येव कीर्तिता भक्तितत्परैः ।
तया [9]मा[9]हेश्वरं नाम स्थलम[10]स्य स्वरूपतः[10] ॥ ६२ ॥†

‡गुरुलिङ्गसमायुक्तमङ्गं माहेश्वरस्थलम् ।
तत्र सन्निहिता भक्तिः नैष्ठिकी सावधानतः ॥ ६३ ॥
अवधानात्मिका भक्तिः इति प्रोक्ता महात्मभिः ।‡

---

[1] त्म (क). [2] नोऽस्य (क्ष). [3] तु (य, क्ष), [4] स्यां (अ). [5] स (अ, क). [6] त्वया (अ), दया (क). [7] स्य (क, य, क्ष). [8] मित्यु (अ). [9] म (अ). [10] स्याः समागतम् (अ), स्य समागतम् (क).

---

* एतच्चिह्नान्तर्गतो भागः 'अ' पुस्तके नास्ति ।

† एतच्चिह्नान्तर्गतौ सार्धश्लोकभागौ मुद्रितपुस्तकवत् ५ सङ्ख्याश्लोकत्वेन तथा ६३ संख्याश्लोकत्वेन चात्र निर्दिष्टौ ।

‡ एतच्चिह्नान्तर्गतौ श्लोकद्वयभागौ एकसंख्यात्वेन यथा मुद्रितपुस्तके निविष्टौ तथात्रापि निविष्टौ ।

भक्त्या तयास्य जीवस्य प्रसादिस्थलमागतम् ।
शिवलिङ्गसमायुक्तं प्रसादिस्थलमागतम् ॥ ६४ ॥

तत्रैव [1]सु[1]स्थिता भक्तिः अवधानात्मिका शुभा ।
स्वानुभूतिनिबन्धेन कीर्तिताऽनुभवात्मिका ॥ ६५ ॥

प्राणलिङ्गिस्थलं चास्य तया भक्त्या समागतम् ।
अङ्गं च चरलिङ्गेन संयुक्तं प्राणलिङ्गि [2]त[2]त् ॥ ६६ ॥

तत्र स्वानुभवाकारा भक्तिरानन्दयोगतः ।
प्रोक्ताऽनन्दात्मिका भक्तिः इति वेदान्तवेदिभिः ॥ ६७ ॥

अस्यात्मनस्तया भक्त्या शरणस्थलमागतम् ।
प्रसादलिङ्गसंयुक्तं अङ्गं [3]स्याच्छ[3]रणस्थलम् ॥ ६८ ॥

तत्र प्रतिष्ठिता साक्षात् भक्तिः आनन्दरूपिणी ।
सामरस्यप्रभावेन प्रोक्ता समरसात्मिका ॥ ६९ ॥

ऐक्यस्थलं तया चास्य चेतनस्य समागतम् ।
महालिङ्गसमायुक्तमङ्ग[4]मैक्यस्थलं परम् ॥ ७० ॥

†तत्रैवावस्थिता भक्तिः स्वस्मिन् स्वयमवस्थिता ।
षडङ्गयोगमार्गेण साधयत्ययमीश्वरम् ॥ ७१ ॥
युगपत् षट्स्थलावा[4]प्तिः सा[4]धकस्यास्य सिध्यति ।†

---

[1] सा (अ, क)· [2] य (अ, क, क्ष). [3] हि श (य, क्ष). [4] सिसा (अ).

---

† एतच्चिह्नान्तर्गतसार्धैकश्लोकभागः मुद्रितप्रतिवत् ७२ सङ्ख्याकश्लोकत्वेन निर्दिष्टः ।

साध्यत्वात् षट् प्रपद्यन्ते [1]इत्या[1]चारादिस्थलानि [2]वै[2] ।
भ[3]क्ता[3]दीनि प्रपद्यन्ते साधकत्वात् स्थलानि [4]षट्[4] ॥ ७२ ॥

साध्यः परशिवः साक्षात् आचारादिषु षट्सु च ।
भ[5]क्ता[5]दिषु स्थले[6]ष्व[6]त्मा साधकोऽयं प्रकीर्त्यते ॥ ७३ ॥

*आचारलिङ्गं गुरुरूपलिङ्गं
शिवाख्यलिङ्गं चरनामलिङ्गं ।
प्रसादलिङ्गं च महात्मलिङ्गं
निवृत्तिमार्गेण षडाहुरार्याः ॥ ७४ ॥

भक्तं माहेश्वरं [7]चैव[7] प्रसादि प्राणलिङ्गि च ।
शरणस्थलमैक्यं हि निवृत्ति[8]र्लय[8]मार्गतः ॥ ७५ ॥

†ब्रह्मा हरिश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
साक्षात्परशिवश्चेति क्रमशः षट्स्थलात्मकाः† ॥ ७६ ॥

एवं लिङ्गाङ्गसंयोगविधिरत्र प्रकीर्तितः ।
अस्माभिरादरेणैव शिवप्रो[9]क्तो[9] यथा तथा ॥ ७७ ॥

---

1 आ (अ). 2 षट् (क). 3 क्त्या (य). 4 वै (य, क्ष). 5 क्त्या (क, य, क्ष). 6 स्वा (अ). 7 नाम (अ). 8 ल (य, क्ष). 9 क्ता (अ).

---

* एतच्चिह्नाङ्कित 'आचारेति' पद्यात् पूर्वं—'उपजातिवृत्तं इन्द्रमाला च' इति वृत्तनिर्देशः कृतः ।

† ब्रह्मेति पद्यमिदं 'अ, क' योर्न दृश्यते ।

एतद्यो वे[1]द सो[1]ऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ।। ७८ ।।

इत्यनुभवसूत्रे *शिवसिद्धान्ततन्त्रे षट्स्थलनिर्णये*
लिङ्गाङ्गसंयोगविधिर्नाम पञ्चमाधिकरणं
†समाप्तम्†

---

[1] त्ति सो (अ, क्ष), त्ति सा (य)·

---

* 'शिवसिद्धान्ततन्त्रे' इति 'य' पुस्तके, 'षट्-स्थलनिर्णये' इति 'क्ष' पुस्तके च न स्तः ।

† एतच्चिह्नान्तर्गतो भागः 'य' ग्रन्थे न दृश्यते ।

# सर्वाङ्ग-लिङ्ग-साहित्यनिरूपणम्

## षष्ठाधिकरणम्

---

अथ श्रीशम्भुना प्रोक्तमनन्तार्थप्रकाशकम् ।
सर्वाङ्गलिङ्गसाहित्यं वक्ष्ये सङ्क्षेपरूपतः ॥ १ ॥

सर्वेष्वङ्गेषु सर्वत्र सर्वदा सर्वतोमुखम् ।
लिङ्गं गुरूपदेशेन सुप्रतिष्ठितमात्मनि ॥
प्रकाशते ततोऽमुष्य [1]चेतन[1]स्य निरन्तरम् ।
सर्वाङ्गलिङ्गसाहित्यं प्रोच्यते लिङ्गतत्परैः ॥ २ ॥

ए[2]क[2]मेव परं लिङ्गमङ्गेऽस्मिन् सुप्रतिष्ठितम् ।
सर्वतोमुखमाभाति नामरूपक्रियात्मना ॥ ३ ॥

इष्टलिङ्गं तु बाह्याङ्गे प्राणलिङ्गं तथान्तरे ।
भावलिङ्गं [3]तथैवास्मिन् आत्माङ्गे सु[3]प्रतिष्ठितम् ॥ ४ ॥

हृदयाङ्गे महालिङ्गं श्रोत्राङ्गे तु प्रसादकम् ।
त्वगङ्गे चरलिङ्गं [4]तु[4] दृगङ्गे शिवलिङ्गकम् ॥ ५ ॥

जिह्वाङ्गे गुरुलिङ्गं तु नासिकाङ्गे तथैव च ।
आचारलिङ्गमश्रान्तं सुप्रतिष्ठितमेव हि ॥ ६ ॥

---

[1] चैतन्य (क); [2] व (अ, क). [3] सदैवात्मरु.ङ्गेऽस्मिन् अरे! (अ); सदैवास्मिन्नात्माङ्गेषु (क). [4] च (अ).

यथा ज्ञानेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ।
तथा कर्मेन्द्रियाङ्गेषु क्रमाल्लिङ्गं प्रतिष्ठितम् ॥ ७ ॥

श्रोत्रवाचोर्न भेदोऽस्ति शब्दस्य वचनस्य च ।
स्प[1]र्शादानद्व[1]योस्तद्वत् भेदो न [2]हि करत्वचोः[2] ॥ ८ ॥

न नेत्रपादयोर्भेदो [3]न जिह्वगुह्ययोस्तथा[3] ।
*[4]न रसानन्दयोर्भेदो[4] न जिह्वागु[5]ह्य[5]योस्तथा* ॥ ९ ॥

नासिकागुदयोर्भेदो नास्ति गन्धविसर्गयोः ।
अस्ति चेदप्रमाणं स्यात् श्रुतिस्सत्यार्थवादिनी ॥ १० ॥

श्रोत्रस्य वाचः शब्दस्य विभोर्व्योम्नस्तथैव च ।
ईश्वरीमीश्वरस्यैनां इशानाख्यां विदुर्बुधाः ॥ ११ ॥

त्वक्पाणिस्पर्शवायूनां ई[6]श्वरीं[6] मूर्तिमैश्वरीम् ।
पुरुषाख्यां विदुः पूर्वे पुराणागमवेदिनः ॥ १२ ॥

चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च ।
अघोरा[7]ख्या[7]मधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः ॥ १३ ॥

रसनाया [8]उ[8]पस्थस्य रसस्यापां तथैव च ।
ईश्वरीं नामदेवाख्यां मूर्तिं मुनिवरा विदुः ॥ १४ ॥

1 र्शदानद्व (क), र्शमादानद्व (य, क्ष)· 2 त्वक्करद्वयोः (अ). 3 रूपस्य गमनस्य च (अ, य, क्ष)· 4 भेदो नानन्दरसयोः (य, क्ष). 5 ह्व (क). 6 री (अ). 7 ख्य (अ). 8 तू (क)

* एतच्चिह्नान्तर्गतो भागः ‘ क ’ पुस्तके न दृश्यते ।

घ्राणास्य चैव पायोश्च गन्धस्य च भुवस्तथा ।
सद्योजाताह्व[1]यां[1] मूर्तिं ईश्वरीं सम्प्र[2]चक्ष[2]ते ॥ १५ ॥

ज्ञानकर्मा[3]त्म[3]नां [4]खा[4]नां आश्र[5]यं[5] हृदयं भवेत् ।
आश्रयत्वात्स्वनैर्मल्यात् ज्ञानकर्मोभयात्मकम् ॥ १६ ॥

इन्द्रियाणां तु सर्वेषां अवकाशप्रदत्वतः ।
हृदयाकाश इत्येव प्रोच्यते [6]मुनिस[6]त्तमैः ॥ १७ ॥

स्थूलाङ्गे स्थूलरूपेण सूक्ष्माङ्गे सूक्ष्म[7]रूप[7]तः ।
कारणे कारणत्वेन तिष्ठन्त्येतानि खानि हि ॥ १८ ॥

तेष्वेषु खेषु सर्वेषु लिङ्ग सत्यादिलक्षणम् ।
गुरूपदेशसंसिद्धं भासते सर्वतोमुखम् ॥ १९ ॥

एतल्लिङ्गमुखं [8]य[8]त्र दृश्यते सू[9]क्ष्म[9]दर्शिभिः ।
यदामनन्ति वेदाश्च तपांसि नियमस्तथा ॥ २० ॥

हृदयं हृदयस्येति श्रोत्रं श्रोत्रस्य सर्वदा ।
[10]वा[10]चो वाक त्वक् त्वचः पाणिः पाणेश्चक्षुश्च चक्षुषः ॥ २१ ॥

पादः पादस्य जिह्वा[11]या[11] जिह्वा गुह्यस्य गुह्यकम् ।
नासिका नासिकायाश्च पायोः प युरिति स्थितिः ॥ २२ ॥

---

1 यं (क). 2 वक्ष्य (अ). 3 त्मा (क्ष). 4 भा (क). 5 यो (क). 6 मतिम (य, क्ष). 7 तत्त्व (क). 8 ह्य (अ, क). 9 यै (अ). 10 व (क). 11 यां (अ).

तल्लिङ्गमुखमित्याहुः शिवसिद्धान्ततान्त्रिकाः ।
प्रत्येकं लिङ्गम[1]स्यैव[1] मुखं वक्ष्ये पृथक् पृथक् ॥ २३ ॥

घ्राणस्य घ्राणमाचारलिङ्गस्य मुखमुच्यते ।
जिह्वायाश्च तथा जिह्वा गुरुलिङ्गमुखं भवेत् ॥ २४ ॥

*चक्षु[2]श्च चक्षुदेश्येतत्[2] शिवलि[3]ङ्ग[3]मुखं भवेत्* ।
†मुखं च शिवलिङ्गस्य नेत्रं नेत्रस्य कथ्यते† ॥ २५ ॥

त्वचस्त्वक् चररूपस्य लिङ्गस्य मुखमुच्यते ।
मुख प्रसादलि[4]ङ्गस्य[4] श्रोत्रं श्रोत्रस्य कथ्यते ॥ २६ ॥

हृदयं हृदयस्यैव महालिङ्गमुखं भवेत् ।

एवं लिङ्गमुखं प्रोक्तं सुप्रसिद्धमनन्तरम् ।
भक्तादिषट्-स्थलानां च हस्तभेदः प्रदर्श्यते ॥ २७ ॥

वस्तु[5]ना[5] भाव उत्पन्नः भा[6]वा[6]त् ज्ञानमसुद्भवः ।
ज्ञाना[7]न्म[7]नससमुत्पन्नं मनसोऽहङ्कृतिस्तथा ॥ २८ ॥

अहङ्कारात्ततो बुद्धिः बुद्धेश्चित्तस्य सम्भवः ।
एतेषां लक्षणं वक्ष्ये भावादीनामनुक्रमात् ॥ २९ ॥

---

1 ऽैव (अ), ऽैतत् (क). 2 चक्षुषश्च तथा चक्षुः (अ, य, क्ष). 3 ङ्गं (क). 4 ङ्गं च (अ). 5 नो (क्ष). 6 व (क्ष). 7 स्म (अ).

---

* एतच्चिह्नान्तर्गतः ८ श्लोकार्धभागः ' क्ष ' पुस्तके तिरोहितः ।

† एतच्चिह्नान्तर्गत २२ श्लोकोत्तरार्धभागः ' क, य, क्ष ' संज्ञितासु प्रतिषु न दृश्यते ।

अस्तीत्यारभ्यते वस्तु तत्सत्ता भाव उच्यते ।
ज्ञानं जानाति तन्नित्यं मनस्तन्मनुने सदा ॥ ३० ॥

अहं तदित्यहङ्कारो बुद्धिस्तन्निश्चिनोति हि ।
चित्तं स्थैर्यगुणेनैव [1]तदे[1]तद्वस्तुसाध[2]क[2]म् ॥ ३१ ॥

चित्तं भक्तस्य हस्तस्स्यात् बुद्धिर्माहेश्वरस्य च ।
प्रसादिनस्तथा ह[3]स्तो[3] ह्यहङ्कार उदीर्यते ॥ ३२ ॥

*मनो हस्तो भवत्येव महतः प्राणलिङ्गिनः ।
ज्ञा[4]नं[4] हस्तो भवत्येव शरणस्य महात्मनः ॥ ३३ ॥
ऐक्यस्य [5]भावो हस्त[5]स्स्यात् एवमेवोत्तरोत्तरम् ।*

आत्माङ्गं भावहस्तं [6]स्यात्[6] महालिङ्गार्चने रतम् ।
ऐक्यलिङ्गमिति प्राहुः साक्षाद्वेदान्तपारगाः ॥ ३४ ॥

व्योमाङ्गं ज्ञानहस्तं [7]स्यात्[7] प्रसादार्चनतत्परम् ।
शरणस्थलमित्याहुः शि[8]व[8]योगपरायणाः ॥ ३५ ॥

अनिलाङ्गं मनोहस्तं चरलिङ्गार्चने रतम् ।
प्राणलि[9]ङ्गि[9]स्थलं साक्षात् इत्याहुः शिवधर्मिकाः ॥ ३६ ॥

---

[1] दत्ते (अ). [2] र (अ, क). [3] स्ता (अ). [4] न (अ). [5] हस्तो भाव, (अ, क). [6] च (क). [7] च (अ, क). [8] व (अ), [9] ङ्गो च (अ).

---

† एतच्चिह्नान्तर्गतसार्धश्लोकैकभागः मुद्रितपुस्तकवत् ३२ संख्यात्वेनात्र निविष्टः ।

अनलाङ्गम[1]हा[1]हस्तं शिवलिङ्गार्चने रतम् ।
प्रसादिस्थलमित्याहुः आचार्याः शिवशास्त्रिणः ॥ ३७ ॥

जलाङ्गं बुद्धिहस्तं च गुरुलिङ्गार्चने रतम् ।
[2]मा[2]हेश्वरस्थलं साक्षात् [3]इति[3] प्राहुर्मनीषिणः ॥ ३८ ॥

भूम्यङ्गं चित्तहस्तं च सदाचारार्चने रतम् ।
भक्तस्थलमिति प्राहुः शिवसिद्धान्तवेदिनः ॥ ३९ ॥

एवमङ्गं च हस्तं च लिङ्गं च मुखमत्र च ।
यथाव[4]दा[4]नुपूर्वेण प्रावोचमहमादरात् ॥ ४० ॥

*ततः पञ्चाक्षरी विद्या साहित्यमधुनोच्यते ।
पञ्चाक्षरी परा विद्या सतारा तु षडक्ष[5]री[5] ॥

स्थलसूक्ष्मादिभेदेन स्वयमेवाष्टधा स्थिता ।
‡शिवमन्त्राभिधा मन्त्रमातृका लिङ्गरूपिणी ॥ ४१ ॥
शिवप्रदायिनी नित्यं सर्वाङ्गेषु प्रतिष्ठिता ।‡*

---

[1] हं (य, क्ष). [2] म (क). [3] एवं (क). [4] द (श, क). [5] रे (क).

---

* एतच्चिह्नान्तर्गतसार्धश्लोकद्वयभागः एकयैव संख्यया यथा मुद्रितप्रतौ गणितः तथाऽत्रापि परिगणितः ।

‡ एतच्चिह्नान्तर्गतः "शिवमन्त्राभिधा" इत्ययं श्लोकः 'श' ग्रन्थे नष्टः ग्रन्थपातात् । स च 'य' पुस्तके इत्थं दृश्यते—

"शिवमन्त्राभिधा सूक्ष्मा सर्वांगेषु प्रतिष्ठिता ।" 'क' प्रतौ तु अयं श्लोक एव नास्ति ।

*अङ्गं नमः पदमसौ शिव एव लिङ्गं
सम्बन्ध †एषां यदयेति पदं तदुक्तम् ।
लिङ्गाङ्गसङ्गमपदत्रयबोधनार्थं
मन्त्रोऽयामेवमभिधास्यति मन्त्रराजः ॥ ४२ ॥

नमः पदं तत् खलु जीववाचि
शिवः पदं तत्परमात्मवाचि ।
अयेति तादात्म्यपदं तदेतत्
नमश्शिवायेति जगाद मन्त्रः* ॥ ४३ ॥

‡मूलाधारे नकाराख्या संस्थिता परमेश्वरी ।
§स्वाधिष्ठा[1]ने मकाराख्या सर्वदा सुप्रतिष्ठिता[1] ॥

---

[1] नमकाराख्या सर्वदा सुप्रतिष्ठिता (अ), नमकाराख्या शाम्भवे पर्यवस्थिता (क), ने मकारस्स्यात् शिकारो मणिपूरके (क्ष).

---

† एतच्चिह्नान्तर्गतो भागः 'क' पुस्तके त्रुटितताळे नष्टः ।

* एतच्चिह्नान्तर्गतः "अंगं" इत्यारभ्य "मन्त्रः" इत्यन्तः श्लोकद्वयभागः 'अ' पुस्तके नास्ति । 'क' पुस्तके तु "नमः पदं" इत्यारभ्य "मन्त्रः" इत्यन्तो भागः न दृश्यते ।

‡ एतच्चिह्नान्तर्गतः 'मूलाधारे' इत्यारभ्य 'समाहिता' इत्यन्तः भागः एकार्थप्रतिपादकत्वात् सार्धश्लोकद्वयत्वेन यथा मुद्रितप्रतौ तथा एकयैव श्लोकसंख्यात्र परिगणितः ।

§ एतच्चिह्नांतर्गतः—"स्वाधिष्ठाने"—इति श्लोकः 'य' पुस्तके नास्ति । 'क्ष' पुस्तके अस्यैव पद्यस्य उत्तरार्धो न दृश्यते । समग्रस्यास्य श्लोकस्य सत्वे एव—'नमः शिवायेति' मंत्रार्थः अक्षरानुपूर्वीक्रमेण सङ्गतो भवेत् । अतः अयं श्लोकः ताळादुद्धृत्यात्र सन्निविष्टः । मुद्रितग्रन्थसम्पादकानां समग्रस्यास्य श्लोकस्यालाभ एव तेषां तत्त्यागकारणं भवेदित्यनुमिनुमः । 'क्ष' (मुद्रित) प्रतौ तु मंत्रार्थानुसारेण श्लोकार्धो निक्षिप्तः । तत्र आधारस्तावत् न तैः प्रत्येकं विवृतः ।

मणि[1]पूरे[1] महास्थाने शिकाराख्या महेश्वरी§ ।
अनाहते वाकाराख्या सदा[2] शैत्री व्यवस्थिता[2] ।। ४४ ।।
विशुद्धौ [3]विमलस्थाने यकाराख्या समाहिता[3] । ‡

¶आज्ञा[4]चक्रे[4] महादेवी ताराख्या स[5]मुप[5]स्थिता ।
आचारा[6]ख्यं[6] नकार[7]स्स्यात् म[7]कारो गुरुलिङ्गकम् ।।
शिकार: शिवलिंङ्ग स्यात् वाकरश्चरलिङ्गकम् ।
यकारस्स्यात् प्रसादाख्यं ओङ्कारो महदुच्यते¶ ।। ४५ ।।

*षष्ठं ब्रह्मा भवेत्तारं यकार: पञ्चमं भवेत् ।
चतुर्थं तु वका[8]रस्स्यात्[8] शिंकारस्तु तृतीयकम् ।।
[9]द्वि्र्नी[9]यं तु मकारस्स्यात् नकार: प्रथमं भवेत् ।
एवं षडक्षराण्येव ब्रह्मणि क्रमशो विदु:* ।। ४६ ।।

†ओङ्कार: परिपूर्णत्वात् त्वचि सर्वत्र तिष्ठति ।
नका[10]रो[10] रुधि[11]रे स्था[11]ति मकारो मांससञ्च[12]ये[12] ।।

---

[1] रक-(क). [2] वसति शोभना (अ), व्यवसिता (क). [3] तु यकाराख्य साक्षाद्विश्वेश्वरी स्थिता (क, य, क्ष). [4] स्थाने (अ). [5] मव (अ, क). [6] ख्यव (अ), ख्य (क). [7] श्चरस्स्यान्म (क). [8] राख्य: (क). [9] द्वी (य). [10] रे (क), [11] नि सा (क). [12] य: (अ, य).

---

¶ एतच्चिह्नान्तर्गत:—' आज्ञाचक्रे ' इत्यारभ्य ' महदुच्यते ' इत्यन्तो भाग: एकार्थप्रतिपादकतया मुद्रितकोशवत् एकसंख्यात्वेन परिगणित: ।

* एतच्चिह्नान्तर्गत: ' षष्ठं 'इत्यारभ्य ' विदु: ' इत्यन्तो भाग: एकार्थप्रतिपादकत्वेन मुद्रितग्रन्थवत् एकसंख्यया परिगणित: ।

† ' ओङ्कारे ' त्यारभ्य ' षडात्मक ' इत्यन्तो (४७श्लोक:) भाग: मुद्रितग्रन्थवत् एक-श्लोकसङ्ख्यात्वेन ग्रथित: ।

शिकारो मेदसि स्था[1]ति वा[1]कारोऽस्थिषु तिष्ठति ।
यकारः स्थाति मज्जायां शुक्ले स्थाति षडात्मकः* ॥ ४७ ॥

एवं षडक्षरमयं शिव[2]वन्मूर्ति[2]संस्थितम् ।
देहं ममेति यो ध्यायेत् सोऽहमेव न संशयः ॥ ४८ ॥

सर्वाङ्गलिङ्गसाहित्यमेवमेव मयोदितम् ।
शिवप्रणीतवाक्या[3]र्थं[3] सम्यगवीक्ष्य समासतः ॥ ४९ ॥

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वै[4]तं[4] शिवं पदम् ॥ ५० ॥

[5]इत्य[5]नुभवसूत्रे ‡शिवसिद्धान्ततन्त्रे‡ §षट्स्थलनिर्णये§
लिङ्गाङ्गसंयोगविधिर्नाम
ष[6]ष्ठा[6]धिकरणं ¶सम्पूर्णम्¶

---

[1] ति व (अ); तुमौ (क). [2] मर्मान्त (अ, क). [3] थै (अ, क, प). [4] त (क). [5] इति श्री वातुलोत्तरतन्त्रे शिवा (य), शिवा (क्ष). [6] षष्ठमा (क्ष).

---

‡ एतच्चिह्नान्तर्गतो भागः 'य, क्ष' योः नास्ति ।
§ एतच्चिह्नान्तर्गतो भागः 'क्ष' पुस्तके नास्ति ।
¶ एतच्चिह्नान्तर्गतो भागः 'अ, प' पुस्तकयोरेव पाठः ।

# अर्पणसद्भावः

## सप्तमाधिकरणम्

अ[1]थ[1] क्रियासु सर्वासु निर्लेपत्वाय चात्मनः ।
श्रीलिङ्गार्पणसद्भावमीश्वरो[2]क्तमहं[2] ब्रुवे ॥ १ ॥

[3]द्वेधा लिङ्गार्पण वेधिः[3] प्रोच्यते देशिकोत्तमैः ।
क्रिया[4]र्पणमतं[4] किञ्चित् [5]किञ्चिन् ज्ञान[5]मतार्पणम् ॥ २॥

*यथा कालोचितैर्द्रव्यैः यदृच्छासम्भवैः स्वयम् ।
स्वोपभोगाय यत्कार्यं त्रिषु लिङ्गेषु सादरम् ॥ ३ ॥
तत्क्रियार्पणमित्याहुः अर्पणैकविशारदाः ।*

षट्सु लिङ्गेषु सर्वत्र सार्वका[6]लि[6]करूपतः ।
स्वयमागतवस्तूनि ज्ञात्वा तत्तन्मुखेषु च ॥ ४ ॥

‡ अनिच्छाविधिना कार्यं [7]एतज्ज्ञा[7]नार्पणं विदुः ।‡

---

[1] दा (अ), तः (क). [2] क्तं मनाक् (क, य, क्ष). [3] लिङ्गार्पण वेधिर्द्वेध (अ). [4] मतार्पणं (अ, य, क्ष). [5] ज्ञान (क). [6] क (य). [7] यत्तत् ज्ञा (क्ष), एतत्ज्ञा (क).

---

* एतच्चिह्नांतर्गतः 'यथा' इत्यारभ्य 'विशारदाः' इत्यंतो भागः यथा-मुद्रितप्रति '३' अङ्कत्वेनात्र उट्टङ्कितः ; एकवाक्यत्वात् ।

‡ एतच्चिह्नांतर्गतोऽर्धश्लोकः श्लोकसङ्ख्यायां अगणितः मुद्रिते यथा, तथा-त्रापि निवेशितः ।

*क्रियार्पणं [1]वदाम्यत्र[1] साम्प्रतं द्रव्यशुद्धये ॥
या या क्रिया वि[2]धा[2]तव्या प्रस्तुता जायते पुरा ।
तां तां कुर्यान्महादे[3]वे[3] समर्पणधिया सुधीः ॥

‡शिवार्पितानि द्रव्याणि न बन्धाय न मुक्तये ।
साक्षाच्छिवप्रसादायैवेति शैवी परा स्थितिः‡ ॥

शिवार्पणविधानोऽत्र सूक्ष्मासूक्ष्मविभेदतः ।
विधीयते सदैवास्य स्वोपभोगाय चात्मनः ॥ ५ ॥*

आत्मोपभो[4]ग[4]जातानि द्रव्याणि [5]विवि[5]धानि च ।
स्थूलाख्यं प्रविविक्ताख्यं आनन्दाख्यमिति त्रिधा ॥ ६ ॥

स्थू[6]ल[6]द्रव्यं भवेद्रूपं प्रविविक्तं रुचिर्भवेत् ।
आनन्दस्तु भवेत्तृप्तिः एवमेव पृथक क्रमात् ॥ ७ ॥

बहिरङ्गार्पणे रूपमन्तरङ्गार्पणे रुचिः ।
§स्थूलद्रव्यार्पणं बाह्यं प्रविविक्तं तथान्तरम् ॥
आत्मसङ्गमयं साक्षात् आनन्दार्पणमुच्यते ।§
¶आत्माङ्गार्पणमेवात्र तृप्तिरित्यभिधीयते ।।¶

---

[1] प्रवक्ष्यामि (य). [2] दा (अ). [3] व (क, य, क्ष). [4] ग्य (अ).
[5] त्रि (अ, क, य). [6] लं (अ).

---

* एतच्चिह्नान्तर्गतः 'क्रियार्पणं' इत्यारभ्य 'चात्मनः' इत्यंतः श्लोकत्रयभागः एकसङ्ख्यात्वेन यथामुद्रितमत्र विनिवेशितः ।

‡ एतच्चिह्नान्तर्गतो भागः 'अ, क' पुस्तकयोर्न दृश्यते ।

§ 'स्थूल' इत्येतत्पद्यं समग्रं 'क' पुस्तके नास्ति ; परन्तु अस्यैव पद्यस्य पूर्वार्धमात्रं 'य, क्ष' योर्न दृश्यते ।

¶ एतच्चिह्नान्तर्गतो भागः 'अ' पुस्तके नास्ति ।

[1]स्थूल[1]द्रव्यार्पको विश्व इष्टलिंगे स्वभावतः ।
[2]प्रविविक्ता[2]र्पकस्साक्षात् प्राणलिंगे तु तैजसः ॥

*भावलिंगे सदा [3]प्रज्ञातृप्तिद्रव्यसमर्पकः[3] ।
†यद्रूपमर्पितं लिंगे तद्रूपं भोक्तुमर्हति ॥ ८ ॥
रूपान्तरं न भोक्तव्यं भुंक्त चेत्तदनर्पितम् ।†

इष्टलिङ्गार्पितं शुद्धं प्राणलिङ्गमुखार्पितम् ।
सिद्धं ततः प्रसिद्धं हि भावलिङ्गार्पितं विदुः ॥ ९ ॥

---

[1] रूप (क, य, क्ष). [2] रुचिद्रव्या (क, य, क्ष). [3] प्राज्ञः आनन्दार्पक उच्यते (अ, य, क्ष).

---

* एतच्चिह्नांतर्गतः सार्धैकश्लोकभागः यथा मुद्रणप्रति ८ सङ्ख्यात्वेनात्र निविष्टः ।

† 'यद्रूप' इति पद्यस्यास्योपष्टम्भकतदर्थोपबृंहणात्मकः अधः प्रदर्शितो भागविशेषः 'य, क्ष' पुस्तकयोर्दृश्यते यथा—

यथा शुक्तिक्रिया [1]पुं[1]सि क्रमेणानुप्रवर्तते ।
सुप्रतिष्ठितलिङ्गस्य न यथा पूर्वभावना ॥
तथा शिवप्रसादस्य पूर्वनाम न संस्मरेत् ।
पूजादौ पूजान्ते भवेद्यं प्रपदेत्पुनरेष हि प्रसादतनुम् ॥
पदार्थकाय: पूजायां भक्तो भक्तिप्रभावतः ।
प्रसादकायः पूजान्ते पुनः पूजाक्रियावधि
यद्रूपं वस्तु नामार्चाकाले लिङ्गमुखार्पितम् ।
तद्रूपं पुनरर्चाकालपर्यन्तं प्रसादकम् ॥
लिङ्गस्य पूजावसरे द्रव्यं दत्तं शुभं भवेत् ।
अनावसरिकं दत्तं अशुभं तदनर्पितम् ॥
लिङ्गस्यावसरे यत्तद्द्रव्यं दत्तं शुभं भवेत् ।
आत्मनोवसरे दत्तमशुभं तदनर्पितम् ॥

---

[1] पूं (य)

[1]त[1]त्तदर्पणतो लब्धं प्रसादं तत्तदादरात् ।
भुङ्क्ते [2]यत्नात्स्व[2]यं विश्वतैज[3]स[3]प्राज्ञरूपतः ॥ १० ॥

जाग्रत्स्वप्नसुषुप्त्या[4]दि[4]सर्वावस्थासु सर्वदा ।
लिङ्गार्पितोपभोगेन नि[5]र्लेपो[5]ऽयं न संशयः ॥ ११ ॥

त्रिषु धामसु यद्भोग्यं भोक्ता [6]भोग्यं च यो भवेत्[6] ।
[7]त्रिविधं[7] प्रति यो [8]वेद स[8] भुञ्जानो न लिप्यते* ॥ १२ ॥

ज्ञानार्पण[9]मतो[9] वक्ष्ये स्वानुभूत्यैकगोचरम् ।
सर्वेन्द्रियमुखागामिद्रव्यदोषनिवृत्तये ॥ १३ ॥

सोऽयं षट्स्थलरूपेण तत्तल्लिङ्गमुखार्पितम् ।
प्रसादमादरेणैव स्वतस्सिद्धं सम[10]श्नु[10]ते ॥ १४ ॥

षडक्षरात्मके लि[11]ङ्गे[11] सर्वाङ्गे सुप्रतिष्ठिते ।
[12]अत्रैतद[12]र्पितं सर्वमित्याहुः श्रुतयः [13]किल[13] ॥ १५ ॥

†ओमिति जगदखिलं स्यात्
नम इति न ममेदमपि शिवायेति ।
समर्पकोऽयं मन्त्रः
षडक्षरो मन्त्रनायको जयति ॥ १६ ॥

---

[1] (य) (अ). [2] ह्यात्मस्व (अ, क). [3] सः (क). [4] दे: (क). [5] र्लोपो (अ), र्लिप्तो (क्ष). [6] यश्च प्रकीर्तितः (अ), भोगश्च यो भवेत् (य, क्ष). [7] अभयं (अ). [8] भेदस्स (क). [9] तं (क). [10] ण्णु (क्ष). [11] ङ्ग (क). [12] तत्रैव चा (अ). [13] खलु (क, य, क्ष).

---

* अत्र "क्रियार्पणम्" इति 'अ, क' पुस्तकयोर्दृश्यते ।

† 'ओमिति' पद्यमारभ्य 'न ममेदं' इत्येतत्पद्यस्यान्तं यावत् 'अ' पुस्तके नास्ति ।

न ममेदं जगत्सर्वं शिवायेति शिवार्पणम् ।
अभिधत्ते द्विमन्त्र ह्यो मन्त्रो लुप्त अकारकः ॥ १७ ॥

*तस्मादर्पणसद्भावज्ञानमेव [1]सदा[1]भ्यसेत् ।*

‡अथ गन्धो रसो रूपं स्प[2]र्शः[2] शब्दस्ततः प[3]रम्[3] ।
परिणा[4]म[4]पदार्थां हि षडेते [5]सार्व[5]का[6]लिकाः[6] ॥
§एकैकस्य पदार्थस्य नानाभेदाः पृथक् पृथक् ।
गन्धादय इमे मात्ताः पृथ्व्यादीनामनुक्रमात् ॥ १८ ॥
एकस्मिन् वस्तुनि [7]र[7]ताः ते सर्वे ह्येकरूपतः ।‡

¶चन्दनादि[8]म[8]यो गन्धः मधुरादिमयो रसः ।
वैद्युतादिमयं रूपं स्पर्शो मृद्वादितन्मयः ॥
स्वानादादिमयश्शब्दः परिणामस्ततः[9]परम्[9] ।
सुखादिमय इत्येवं नानाभेदाः प्रकीर्तिताः ॥¶ १९ ॥

एवं रूपेषु सर्वेषु पदार्थेषु निरन्तरम् ।
लिङ्गार्पण[10]धिया[10] ह्यात्मा प्रसादसुखमश्नुते ॥ २० ॥

---

[1] सम (अ, य, क्ष). [2] र्शं (अ). [3] रः (क). [4] मः (अ). [5] स्वार्थं (अ, क). [6] रकः (क). [7] ग (अ). [8] यु (अ). [9] रः (क, य, क्ष). [10] धिया (अ).

---

* एतच्चिह्नांतर्गतः अर्धश्लोकः यथामुद्रितप्रति विशिष्टः पद्याङ्कानुद्दङ्कितः स्थापितः ।

‡ अथेत्यादि सार्धश्लोकद्वयभागः यथा मुद्रितप्रति १८ पद्यसंख्यात्वेन विनिविष्टः ।

§ 'एकैकस्य' 'गन्धादय' इत्येतच्छ्लोकार्धद्वयं 'अ, क' पुस्तकयोः विपरिणतमस्ति ।

¶ एतच्चिह्नान्तर्गत श्लोकद्वयभागः यथामुद्रितप्रति १९ श्लोकत्वेनपरिगणितः ।

द्रव्याण्येतानि [1]सर्वाणि[1] विभज्य स्वस्वरूपतः ।
लिङ्गार्पणधिया भुङ्क्ते तानि वस्तूनि सर्वदा ॥ २१ ॥

[†]भक्तोऽयमात्मा स्वयमेव गन्धं
आचारलिङ्गा[2]र्पि[2]तमादरेण ।
भुङ्क्ते सदा सन्निहितस्वभावात्
प्रसादरूपेण समागतं हि ॥ २२ ॥

महेश्वरोऽयं गुरुलिङ्गमूर्तेः
मुखे सदैवार्पितमाकलय्य ।
प्रसादभूतं रसमा[†]नुकूल्यं[†]
स्वभावतः सादरमेव भुङ्क्ते ॥

रूपं पदार्थं शिवलिङ्गवक्त्रे
समर्पितं सन्ततमेव भक्त्या ।
स्वयं समायातमुपाधि[3]योगा[3]त्
अयं प्रसादी भजते प्रसा[4]द[4]म् ॥ २३ ॥

स्प[5]र्श[5] समादाय च तुप्रका[6]रं[6]
समर्पितं यच्च गलिङ्गवक्त्रे ।
भुङ्क्ते प्रसादात्मतयोपलब्धं
यः प्राणलिङ्गी स्वयमेवमात्मना ॥ २४ ॥

---

[1] सिद्धानि (क). [2] दि (क). [3] भेदा (अ). [4] ध (अ). [5] शे (क); र्शः (ग). [6] रात् (अ).

---

[†] मतुल्यं इति 'क' पुस्तकपाठः ।

य एष नित्यं शरणस्थलात्मा
प्रसादलिङ्गार्पितमेव शब्दम् ।
स्वयं गृहीत्वा विविधोपयोगाद्
प्रसादभोगं कुरुते [1]स्व[1]भावात् ॥ २५ ॥

ऐक्यात्मकोऽयं परिणामवस्तु
सदा महालिङ्गसमर्पितं हि ।
स्वभावसिद्धं निजभक्तियोगात्
निषेवते तृप्तिघनप्रसादम् ॥ २६ ॥

एवं षडङ्गस्थलरूपतोऽसौ
[2]स्वस्मिन्[2]स्थिते षड्विधलिङ्गतत्त्वे ।
समर्पितं षड्विधवस्तु जातं
प्रसादरूपेण सदैव भुङ्क्ते ॥ २७ ॥

†आचारायार्पिता पृथ्वी गुरोरापस्समर्पिताः ।
शिवाय चार्पितं तेजः चराय मरुदर्पितः ॥ २८ ॥
प्रसादायार्पितं व्योम जीवात्मा महतेर्पितः ।†

आचारे दिव्यलिङ्गे निरुपमनिजभक्तस्थलाङ्गे[3]क्य[3]भाजि
घ्रा[4]णाख्ये[4] चित्तहस्तेन च घनसुखहे[5]तौ[5] क्रियाशक्तियुक्ते ।

---

[1] प्र (अ). [2] स्वात्म (अ). [3] क (अ). [4] ण स्ये(अ, क). [5] तु (अ).

---

* एतच्चिह्नांतर्गतो भागः (अ, क) योः कोशयोर्न दृश्यते । अथ च अयं सार्धश्लोकैकभागः मुद्रितपुस्तकवत् २८ संख्यात्वेनात्र संयोजितः ।

घ्रातव्यं द्रव्यमप्प्यर्पणविषयविधानोपदिष्टं समर्प्य
प्रायस्सद्भक्तिपू[1]र्णे[1]स्स्व[2]यमयमिह[2] गन्धप्रसादं भजेत ॥ २९ ॥

स्वाङ्गे माहेश्वरात्मन्यनुपमसहजज्ञानशक्तिप्रयुक्ते
[3]जिह्वास्ये[3] सुप्रसि[4]द्धे[4] परतरगुरुलिङ्गाभि[5]धे[5]संस्थितेऽस्मिन् ।
निष्ठाभक्तिप्रभावप्रणिहितसुमहाबुद्धिहस्तेन विद्वान्
रस्यं द्रव्यं समर्प्य स्वयममलरसाख्यं प्रसादं भजेत ॥ ३० ॥

योऽसौ नि[6]त्यं[6] प्रसादिस्थलपरमपदप्राप्तदिव्याङ्गभाजि
स्वेच्छाशक्तिप्रयुक्ते दृशि जगति मुखे पाणिनाहङ्कृतेन ।
साक्षाल्लिङ्गे शिवाख्ये सविनयमवधानात्मता[7]भ[7]क्तियु[8]क्तो[8]
द्रष्टव्यांशं समर्प्यार्पणविनिहितरूपप्रसादं भजेत ॥ ३१ ॥

सं[9]सक्ते[9] प्राणलिङ्गिस्थलनिहितनिजाङ्गे मनः[10]श[10]रिनासौ
लिङ्गे [11]साक्षा[11]च्चराख्ये त्वचि ज[12]गति वि[12]मुखे ह्यादिशक्तिप्रयुक्ते ।
[13]स्प[13]ष्टव्यं चार्पयित्वा स्वयमनुभवभक्तिप्रभावोपपन्नो
नित्यं स्पर्शप्रसादं निरतिशयसुखं तत्त्ववेत्ता भजेत ॥ ३२ ॥

लिङ्गे साक्षात्प्रसा[14]दे[14] विमलशरण[15]संज्ञा[15]ङ्ग संस्थापि[16]ते[16]ऽस्मिन्
श्रोतव्यं श्रोत्रवक्त्रे निखिलमिह पराशक्तियुक्ते समर्प्य ।
आनन्दाकारभक्तिस्फुटतरपरमज्ञानहस्तेन सोऽयं
शब्दाख्यं तत्प्रसादं स्वयमविरतमत्याश्र[17]म[17]स्थो भजेत ॥ ३३ ॥

---

1 र्णा (अ, क). 2 यमि (अ). 3 जिह्वास्य (अ), लिङ्गास्ये (य, क्ष). 4 द्ध (अ). 5 दे (अ), धैः (क). 6 त्य (अ). 7 श (अ). 8 क्तौ (क). 9 शक्त (अ), शक्ति (क). 10 प्रा (क). 11 चास्मिन् स (अ). 12 ग (अ). 13 स्व (क). 14 द (क) 15 स्थे (अ). 16 चा (अ). 17 य (अ).

ऐक्या [1]ङ्गे[1] भा [2]जि[2] लिङ्गे महति हृदि मुखे चिन्महाशक्तियुक्ते
नित्यं भावेन हस्तेन च समरसभक्तिप्र[3]स[3]क्तः स्वयं सन् ।
[4]स्मर्त[4]व्यं चार्पयित्वा वि[5]शद[5]मतिरवश्यं स[6]दैवा[6]र्पणीयं
तस्माल्लब्धं विशुद्धं घनतरपरिणामप्रसादं भजेत ।। ३४ ।।

*अङ्गं च लिङ्गं च मुखं च हस्तौ
भक्तिश्च शक्तिश्च तथार्पणं च ।
प्रसाद इत्यष्टविधस्थलानि
प्रतिस्थलं षट्स्थलसंज्ञितानि ।। ३५ ।।

सवितुः पदमङ्गं स्याद् भर्गपदं लिङ्गमेव सम्बन्धः‡ ।
धीमहि पदमित्येषा गायत्र्याङ्गलिङ्गसम्बन्धः§ ।। ३६ ।।

जीवस्सविता देवः परमो भर्गस्तदर्थकं वरणीयम् ।
अनयोरक्यं धीमहि पदमेषा प्राह जीवपरमैक्यम् ।। ३७ ।।

†अङ्गं च लिङ्गं च [7]सदेव जातं[7]
भक्तिश्च शक्तिश्च तथा [8]चिदेव[8] ।

---

[1] ङ्गे (क, य, क्ष). [2] व (क). [3] श (अ). [4] ज्ञातव्यं (क, क्ष). [5] मल (अ). [6] मर्प्या (अ). [7] सदैव जातं (अ).मुखं च हस्तौ (क). [8]र्पणं च (क).

---

* अत्र—' उपजातिवृत्तम् ' इत्येतच्चिह्नाधस्तनयोः पद्ययोर्वृत्तनिर्देशः ' अ ' पुस्तके दृश्यते ।

---

‡ न्धम् (क्ष). § न्धम् (क्ष).

[1]आनन्द एव स्वयमर्पणं च[1]
[2]प्रसादरूपं च भवेत् त्रितत्त्वम्[2] ॥ ३८ ॥

*अङ्गं जीवः परमो लिङ्गं
सम्बन्ध एव तादात्म्यम् ।
तद्वत्पदार्थरूपं प्रसाद-
रूपं समर्पणं त्रिविधम् ॥ ३९ ॥

[3]पदार्थ[3]रूपो जीवश्च प्रसादः परमो भवेत् ।
समर्पणं च तादात्म्यं इति शैवी परा स्थितिः ॥४०॥*

†एकधा च त्रिधा च षड्धा (?) नवधा च प्रवर्तते ।
स्वयमेव परं लिङ्गं न ततोन्यच्च किञ्चन ॥ ४१ ॥†

नवलिङ्गान्यविज्ञायतन्मुखान्यर्पणानि च ।
कथं निर्लेपतामेति सर्वेष्विन्द्रियकर्मसु । ४२ ॥

‡लेपोऽङ्गं न जह्येज्जातु तज्ज्ञं स्पृशति न क्वचित् ।
सर्पिषा लिप्यते पाणी रसना नैव लिप्यते ॥ ४३ ॥

यथा कालिकया दृष्टौ सम्पृक्तापि न लिप्यते ।
पक्ष्मणोरन्तरा तारा तथा सम्यक् शिवात्मवित् ॥ ४४ ॥‡

---

[1] आनन्द एवार्पणमुत्तमं च (अ), प्रसाद इत्येव च षट्स्थलानि (क).
[2] प्रतिस्थलै] षट्स्थलसंज्ञितानि (क). [3] प्रसाद (य).

---

* एतच्चिह्नान्तर्गते पद्ये 'य, क्ष' पुस्तकयोरेव दृश्येते ।
† एतच्चिह्नान्तर्गतः श्लोकः 'अ, क, य' पुस्तकेषु नास्ति ।
‡ एतच्चिह्नान्तर्गतौ श्लोकौ 'अ, क' पुस्तकयोर्न दृश्येते ।

शरीरादिपदार्थांश्च दत्वा दानं समर्पणम् ।
समर्प्य सोऽहमस्मीति दासोऽहंभाव उच्यते ॥ ४५ ॥

इन्द्रियादागतं किञ्चित् यत्सुखं तच्छिवार्पितम् ।
तत्प्रसादं तु भोक्तव्यं तदिन्द्रियमुखेन च ॥ ४६ ॥

‡येन गन्धरसौ रूपस्पर्शशब्दरतिक्रियाः ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥ ४७ ॥‡

एवं लिङ्गार्पितं सर्वं इति यो वेत्ति तत्त्वतः ।
सोऽश्नुते सकलान् [1]भोगा[1]न् विपश्चित् ब्रह्मणा सह ॥ ४८ ॥

*लिङ्गदेही सदात्मायं लिङ्गाचारो न लौकिकः ।
सर्वं लिङ्गमयं रूपं लिङ्गेन सममश्नुते ॥ ४९ ॥

सर्वाङ्गं लिङ्गमेव स्यात् अन्नपानाद्यमार्पितम् ।
प्रसादस्तृप्तिरेव स्यात् सर्वं लिङ्गमयत्वतः ॥ ५० ॥‡

एतदर्पणसद्भावज्ञानं वेदान्तवाक्यजम् ।
गुरूपदेशतस्साध्यं नान्यथा शास्त्रकोटिभिः ॥५१ ॥

---

[1] कामा (अ, क).

---

‡ एतच्चिह्नांतर्गतपद्यपूर्वोत्तरार्धयोर्मध्येऽयमधःप्रदर्शितः श्लोकार्धो दृश्यते—
" गन्धाद्रसाद्रूपं स्पर्शाच्छब्दात् रतिक्रियाम् " इति।

* एतच्चिह्नान्तर्गतो भागः ' य, क्ष ' पुस्तकयोर्नास्ति।

 

[1]श्रीलिङ्गा[1]र्पणसद्भावम[2]वो[2]चं परमार्थतः ।
अर्पितं च प्रसादं च [3]भो[3]गं निर्लेपतां प्रति ।। ५२ ।।

एतद्यो वेद वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ।। ५३ ।।

[4]इत्य[4]नुभवसूत्रे †शिवसिद्धान्ततन्त्रे† §षट्स्थलनिर्णये§
अर्पणसद्भावो नाम
सप्तमाधिकरणं ¶सम्पूर्णम्¶

---



---

[1] एतद (अ). [2] थो (कं). [3] यो (अ). [4] इति वातुलोत्तरतन्त्रे शिवां (य), शिवा (क्ष).

---

† एतच्चिह्नान्तर्गतो भागः ' क्ष ' पुस्तके नास्ति ।
§ एतच्चिह्नान्तर्गतो भागः ' अ, क ' पुस्तकयोर्नास्ति ।
¶ एतच्चिह्नान्तर्गतो भाग : ' य, क्ष ' पुस्तकयोर्नास्ति ।

# क्रियाविश्रान्तिः

## अष्टमाधिकरणम्

क्रियाविश्रान्तिमाचक्षे साक्षादीश्वर[1]भाषि[1]ताम् ।
देव्यै रहस्यरूपेण तामिदानीं [2]समास[2]तः ॥ १ ॥

अस्यात्मनः क्रिया[3]स्सर्वाः[3] लिङ्गार्पिततया स्थि[4]ताः[4] ।
स्वस्मिन्नेव स्वयं यान्ति विश्रान्तिं सुखलक्षणाम् ॥ २ ॥

प्रोच्यते परमार्थज्ञैः क्रियाविश्रान्तिरित्यतः ।
क्रियाविश्रान्तिरेवात्र सम्यग्ज्ञानं न संशयः ॥ ३ ॥

सम्यग्ज्ञानमयं सा[5]क्षात्[5]शिव एवेति वेदनम् ।
वेदनेनैव तेनायं आप्तकामः सुखी भवेत् ॥ ४ ॥

[6]आप्तकामस्य[6] सुखिनः कामाचारा बहिर्मुखाः ।
प्रवृत्ता लौकिकास्सर्वे प्रययुर्नाशमात्मनि ॥ ५ ॥

[7]प्र[7]णष्टेष्वेषु सर्वेषु स्वेच्छाचारेण यत्कृतम् ।
तच्छिवा[8]र्चन[8]मेव स्यात् यद्भुक्तं तच्छिवार्पितम् ॥ ६ ॥

---

[1] बोधि (क). [2] स्वरूप (अ). [3] शक्तिः सर्वं (क). [4] ता (क).
[5] धु (क). [6] ज्ञानाप्त (क). [7] प्रा (अ). [8] पंण (अ), चंण (क).

शिवरूपतया सर्वं यस्य भाति स्व[1]रूप[1]तः ।
स्वेच्छाचारसमाचारः तस्य चार्चा हि शूलिनः ॥ ७ ॥

एवमर्चनमीश[2]स्य स्वे[2]च्छाचारनिबन्धना ।
भवत्येव न सन्देहः शिवोऽहमिति वेदनात् ॥ ८ ॥

* अहमिति शिव एव सत्यचिद्घनः
स्फुरति तदा पृथगस्ति नैव वस्तु ।
इदमिति वपुषा [3]न[3] तेन बन्धनं
न हि [4]शरण[4]स्य विमोचनं [5]हि[5] किञ्चित् ॥ ९ ॥

बन्धमुक्त्योरभावे हि भक्तिरु[6]क्ता[6] निरर्ग[7]ळा[7] ।
न बन्धे मोचने चापि न तयोश्च समुच्चये ॥ १० ॥

बन्धे सति विमुक्तिस्स्यात् सत्यां मुक्तौ च बन्धनम् ।
अन्यस्यापगमादस्य आगमिष्यति केनचित् ॥ ११ ॥

परस्प[8]रानु[8]बन्धेन व[9]र्ते[9]ते बन्धमोचने ।
तस्मात्तयोरभावे तु भक्ति[10]रुक्ता[10] निरङ्कुशा ॥ १२ ॥

न यो[11]गो[11] न तपो नार्चाक्रमः कोऽपि न विद्यते ।
अमाये शिवमार्गेऽस्मिन् भक्तिरेका प्रशस्यते ॥ १३ ॥

---

[1] भाव (अ,क ). [2] स्यासे (अ). [3] च (अ), [4] पुरुष (क). [5] च (य. क्ष). [6] क्त (अ). [7] ळः (अ). [8] रम (क). [9] र्तं (अ). [10] र्बद्धो (क). [11] गे (क).

---

* 'अहमिति' पद्यारम्भे पद्यस्यास्य "अर्धसमवृत्तम्" इति वृत्तनिर्देशः 'अ, क' ग्रन्थयोः दृश्यते ।

* ज्ञानं ब्रूते भक्तिः कुरुते
शिवजीवयोः पृथग्भावम् ।
तेन ज्ञानं पूर्वं भक्तिस्तू-
त्तरतथा विभाति ततः ॥ १४ ॥

पापान्नरकः पुण्यात्स्वर्गः
ताभ्यां विनैव कर्मभ्याम् ।
ज्ञानान्मोक्षस्त्रिभिरेव
विना स्यात्प्रसादतो भक्तिः* ॥ १५ ॥

प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः ।
यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरः ॥ १६ ॥‡

भक्तिस्सत्वगुणस्था
रजोगुणाढ्या तमोगुणस्थिता ।
स्यात[1]न्न्ये[1]ण सलीला
प्रवर्तते शिवसमर्पिता शुद्धा ॥ १७ ॥

†सत्वरज[2]स्तमसामप्यतिरिक्ता[2]
भक्तिरेभिरुपपन्ना ।
[3]स्व[3]विशुद्धतया [4]तानप्येका[4]कारा[5]न्
करो[5]ति हि त्रिगुणान्† ॥ १८ ॥

---

[1] न्त्र (अ, क्ष). [2] सत्वरजस्तामसमप्येवेति का (क). [3] स (क).
[4] तस्मादे (अ, क). [5] न्मरौति (क).

---

* एतच्चिह्नान्तर्गतौ श्लोकौ '२७' सङ्ख्याङ्कित 'शुभं कर्माशुभं कर्म' इति पद्यानन्तरस्थश्लोकत्रयस्य आद्यन्तश्लोकौ 'य क्ष' ग्रन्थयोर्भवतः ।

‡ एतच्चिह्नाङ्कितं पद्यं 'अ, क' पुस्तकयोर्नास्ति ।

† एतच्चिह्नान्तर्गतः श्लोकः 'अ' पुस्तके नास्ति ।

न राज[1]सो[1] गु[2]णं[2] भक्तौ परा[3]थां[3] नैव तामसः ।
न सात्विकगुणोऽपि स्यात् स्वगुणैरगुणैव सा ।। १९ ।।

*रौप्यं ताम्रमयोघनं त्रितयमेतत्सात्विकं राजसं
प्रोक्तं तामसमेषु च त्रिषु [4]विले[4]पं सश्रितेऽपि स्वयम् ।
[5]कुर्या[5]त्सिद्धरसः स्वनिर्मलतया लोहत्रयं [6]तद्यथा[6]
स्वर्णं षोडशवर्णपूर्णमकरोद्भक्ति[7]स्तथा[7] त्रीन् गुणान् ।। २० ।।

यथा सिद्धरसो लोहत्रयं चैकप्र[8]कार[8]तः ।
[9]कुर्यात्स्व[9]र्णं तथा भक्तिर[10]तिः[10] शैवं गुणत्रयम् ।। २१ ।।

कस्तूरीहिमकुङ्कुमानि [11]हि[11] तमस्सत्वं रजो वर्णतः
कृष्णं शु[12]भ्र[12]मथारुणं यदुपरि प्राप्ता शिवैकात्मिका ।
भक्तिः स्वात्मगुणा[13]त्मि[13]का जयति तत्सद्भासनारूपिणी
नैर्गुण्ये परमे पदे किमिह वक्ष्ये भक्तियोगस्थि[14]ति[14]म् ।। २२ ।।

‡शिलालेखा स्थ[15]ली[15]लेखा जललेखा त्रिधा क्रमात् ।
शुभाशुभात्मिका कर्मज्ञानभक्तिक्रिया मता ।।

---

[1] सा (य). [2] णा (अ). [3] र्थं (क). [4] निर्लें (क). [5] नेया (क). [6] चैकदा (अ, क). [7] स्सदा (अ). [8] ताप (अ). [9] चक्रे ख (अ, क). [10] तिः (अ). [11] च (अ). [12] क्र (अ). [13] धि (अ). [14] त (क). [15] ला (य).

---

* अत्र "रौप्यं" इति पद्यस्य शार्दूलविक्रीडितता 'अ: क' पुस्तकयोर्निर्दिष्टा ।

‡ एतच्चिह्नान्तर्गतपद्यद्वयं २५ सङ्ख्यासङ्केतित 'इन्द्रियाकार' इति पद्यानन्तरं य, क्ष पुस्तकयोःवर्तते ।

अथ च 'शिलालेखा' इत्यारभ्य 'लुप्यते' इत्यन्तं मुद्रितप्रतौ यथा एकसंख्यात्वेन पद्यद्वयं परिगणितं तथात्रापि विशिष्टैकार्थप्रतिपादकतयास्य भागस्य २२ संख्यात्वेन निर्देशः कृतः ।

नै[1]व लं[2]घ्या[2] शिलालेखा [3]स्थली[3]लेखा च लुप्यते ।
नादौ लेखायते चान्ते जललेखा न लुप्यते ॥ २३ ॥

अहं कर्ता समस्तस्य धर्माधर्मस्य कर्मणः ।
इत्यनेनाभिमानेन कर्म[4]का[4]ण्डोऽयमुच्यते ॥

नाहं कर्तास्य कर्तृत्वं शिवस्साक्षी स्वभावतः ।
इत्यनेनाभिमानेन ज्ञानकाण्डोऽयमुच्यते ॥

न कर्ताहं न साक्षी च शिव[5]एवै[5]ते कर्म[6]णा[6] ।
द्वयाभिमानराहित्यं [7]भ[7]क्ति[8]का[8]ण्डोऽयमुच्यते ॥ २४ ॥

*शुक्तिः कर्मपदं सरोरुहदळं ज्ञानं पदं भाक्तिकं
तप्तायोघनमेषु स[9]स्रुति[9]पयोबि[10]न्दुः स्थितस्त[10]त्क्रमात् ॥
साफल्यं विफलत्वमाकृतितया प्रायेण नाशं [11]गतो[11]
[12]नाम्नाप्ये[12]व शिवात्मिकां परतरां भक्तिं किमाचक्ष्महे ॥ २५ ॥

---

[1] सै (अ). [2] घ्य (अ). [3] स्मृति (अ). [4] ख (अ). [5] मे (अ) [6] णोः (य, क्ष). [7] तन्न (क). [8] खः (अ). [9] स्थित (अ). [10] न्दुस्थिता (अ). [11] ता (अ, क). [12] सामीप्ये (अ), नाम्नास्यै (क). ।

---

* अत्र 'शुक्ति' रिति पद्यस्य शार्दूलविक्रीडितवृत्तता 'अ, क' पुस्तकयोः निर्दिष्टा ।

* स्वच्छन्दाचारवर्तिन्या भक्त्या यत्कृतमर्चनम् ।
यद्भुक्तमर्पितं लिङ्गे [1]मनोवाक्कायकर्मभिः[1] ।।
गन्धपुष्पादिगन्धस्य ग्रहणं [2]यत्तदर्च[2]नम् ।
षड्रसास्वादनं [3]यत्तन्नै[3]वेद्याय प्रकल्पितम् ।।
† इन्द्रियाकारभा[4]वेन[4] विषयाकार[5]तम्स्वय[5]म् ।
क्रीडया देवता भुङ्क्ते स्वत इत्यर्च[6]नं[6] मतम्*† ।। २६ ।।

‡लिङ्गदेहे शिवात्मायं लिङ्गाचारी न लौकिकः ।
सर्वलिङ्गमयं रूपं लिङ्गेन स[7]मम[7]श्नुते ।। २७ ।।

§शुभं कर्माशुभं कर्म ज्ञानकर्म प्रसादकम् ।
एतच्चतुर्विधं कर्म तत्तत्फलविधायकम्§ ।। २८ ।।

आत्मानं च पृ[8]थ[8]क् कृत्वा प्रेरितारं तथा पृ[9]थ[9]क् ।
असौ जुष्टस्ततः तेन ह्यमृतत्वाय कल्पते ।। २९ ।।

आत्मोपासक ईश्वरस्त्वयमुपास्यस्सर्वदैवेत्यसौ
भक्तिर्भोगकरी करोति शिवमात्मानं च कृत्वा पृ[10]थ[10]क् ।

---

[1] सत्यमेव मयोदितम् (अ). [2] तस्य पूजनम् (अ). [3] तस्य नै (अ)
[4] सा सा (अ). [5] भासन (अ). [6] नं (अ, क). [7] ह अ (अ).
[8], [9], [10] थु (क्ष).

---

* एतच्चिह्नितः श्लोकत्रयभागः यथामुद्रितप्रति २५ श्लोकत्वेनात्र निविष्टः ।

† एतच्चिह्नान्तर्गत 'इन्द्रियाकार' इति पद्यानन्तरं '२२' सङ्ख्यैकमात्रसङ्केतितं "शिलालेखा" तथा "नैव लोप्या" इति पद्यद्वयं वर्तते ।

‡ एतच्चिह्नान्तर्गतः 'लिङ्गदेहे' इति श्लोकः 'य, क्ष' पुस्तकयोर्नास्ति ।

§ एतच्चिह्नान्तर्गतपद्यं 'अ, क' ग्रन्थयोर्नास्ति । एवं एतत्पद्यानन्तरं १५ संख्यात्वेन १६ संख्यात्वेन च संकेतितौ 'पापान्नरकः' तथा 'न योगो' इति श्लोकौ 'य' क्ष पुस्तकयोर्दृश्येते ।

अतनत्क्षीरघृतारणीहुतवहस्रोतोम्बुवत्संयुतं
जीवेशैक्यपदं विभज्य परतोऽप्यस्यामृतत्वाय हि ॥ ३० ॥

नेत्रे च त्वयविलोकिते सति पृथक्त्वं याति यच्चिरं
रूपं वस्तु यदेकमेव पुरुषेणाश्चर्यसंस्पृष्टधिया ।
कृत्वा भूय उभे समे यदि दृशौ तेनेक्षिते सत्यमू
रूपं पूर्ववदेव विमलं चैकं स्वभावेन हि ॥ ३१ ॥

*सर्वाङ्गं लिङ्गमेव स्यात् अन्नपानाद्यमर्पितम् ।
प्रसादस्तृप्तिरेव स्यात् सर्वं लिङ्गमयं भवेत्* ॥ ३२ ॥

एवमद्वैनभक्त्यैव प्रसादस्सर्वतोमु[1]ख:[1] ।
प्रसिध्यति ततस्सर्वमात्मरूपेण दृश्यते ॥ ३३ ॥

कर्ता कारयिता चैव कारणं कार्यमेव च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ३४ ॥

भोक्ता भोजयिता भो[2]गो[2] भोगोपकरणा[3]नि[3] च ।
सर्वमात्मतया भाति प्रसादा[4]त्पा[4]रमेश्वरात् ॥ ३५ ॥

†ग्राहकश्च तथा ग्राह्यं ग्रहणं सर्वतोमुखम् ।
सर्वमात्मतया भाति प्रसादा[5]त्पार[5]मेश्वरात्† ॥ ३६ ॥

जीवात्मा परमात्मा च तयोर्मेदश्च भेदकः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ३७ ॥

शरीरमिन्द्रियं प्राणा मनोबुद्धिरहङ्कृतिः ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ३८ ॥

---

[1] खं (क्ष). [2] गं (अ). [3] दि (क्ष). [4] त (क). [5] त्प (अ).

---

* एतच्चिह्नान्तर्गतं पद्यं 'य, क्ष, पुस्तकयोर्नास्ति ।
† एतच्चिह्नान्तर्गतं पद्यं 'क' पुस्तके न दृश्यते ।
‡ एतच्चिह्नान्तर्गतपद्ये अकयोर्न स्त:

*विधयश्च निषेधाश्च निषि[1]द्ध[1]करणान्यपि ।
सर्वमात्मतया भाति प्रसादा[2]त्पार[2]मेश्वरात् ॥ ३७ ॥

†कामक्रोधादयस्सर्वे तथा शान्त्यादयोऽपि च ।
सर्वमात्मतया भाति प्रसादात्पारमेश्वरात् ॥ ३८ ॥

तस्मादद्वैत[3]गां[3] भक्तिं आश्रयेत्सर्वसिद्धिदाम् ।
न च द्वैतात्मि[4]कां[4] भक्तिं क्लेशहेतुप्रदायिनीम् ॥ ३९ ॥

‡अन्योन्यप्रार्थकं द्वैतं समसंयोगयोस्तयोः ।
कं कं भजति भक्त्या सा भक्तिरद्वैतगा न हि ॥ ४० ॥

अद्वैतपदरूढा या भक्तिरद्वैतलक्षणा ।
सैवाद्वैताभिधा भक्तिः अन्या केवलकल्पिता ॥ ४१ ॥

द्वैतभ[5]क्त्या[5] हि संसारवर्धनं भिन्नरूपतः ।
अभिन्नरूप[6]तो[6] द्वैतभक्त्या संसारनाशनम् ॥ ४२ ॥

§द्वैतभ[7]क्तिः[7]प्रपञ्चाख्या केनचित्कल्पिता मृषा ।
अद्वैतभक्तिरचला निर्विकल्पा निरञ्जना ॥

---

[1] द्वं (अ). [2] त्प (अ, क). [3] गा (अ). [4] कं (अ). [5] क्ता (अ). [6] ता (अ, क). [7] क्ति (अ).

---

* विधयश्चेति श्लोकानन्तरं अस्यैवाधिकरणस्य ३२ तमः श्लोकोऽत्र पुनरावृत्तः—
"प्रसादाद्दैवताभक्तिः प्रसादो भक्तिसम्भवः ।
यथैवांकुरतो बीजं बीजतो वा यथांकुरः ॥" (अ).
क [1] प्रतौ श्लोकोऽयमत्र नास्ति ।

† 'कामक्रोधादय' इत्ययं श्लोकः 'अ क' पुस्तकयोर्नास्ति ।

‡ अन्योन्येत्ययं श्लोकः 'अ क' पुस्तकयोर्नास्ति ।

§ एतच्चिह्नितभागीयश्लोकत्रयाणि यथामुद्रितप्रति एकश्लोकसंख्यात्वेन परिगणितानि ।

द्वैतभक्तिनिवृ[1]त्तौ[1] हि साक्षादद्वैतलक्षणा ।
भक्तिर्गरीयसी भाति निजनिर्वाणरूपिणी ॥ ४४ ॥

अद्वैतभक्तियुक्तस्य योगिनः सक[2]ला:[2] क्रियाः ।
आस्ते दग्धपटन्यायात् क्रियामात्रा हि न क्रिया§ ॥ ४५ ॥

क्रियामात्रा क्रिया [3]नैव[3] प्रतिबन्धा[4]य[4] देहि[5]नाम्[5] ।
केव[6]ला[6] निर्मला शुद्धा फलकामविवर्जि[7]ता[7] ॥ ४६ ॥

†फलकामप्रयुक्ता हि क्रिया सा प्रतिबध्यते ।
क्रियामात्रा न बन्धायेत्यत्राश्चर्यं किमुच्यताम् ॥ ४७ ॥

‡निष्फला निष्फला नैव सफला सफला न हि ।
क्रियाद्वैतसिद्धान्तभक्तियोगसमाश्रिता ॥ ४८ ॥

फलकाम[8]तया कर्मकरणं[8] प्रतिबध्यते ।
¶न कर्ममात्रकरणं तस्मात्कर्मफलं त्यजेत् ॥ ४९ ॥

त्यक्ते कर्मफले[9]ऽप्यस्य[9] विलासो नैव बाधते ।

---

[1] त्ता (क्ष). [2] ल (अ, य, क्ष). [3] द्वैत (क). [4] हि (क). [5] नः (अ, क). [6] लं (अ). [7] तः (क). [8] प्रयुक्ताः क्रियाः न (क). [9] कर्म (अ, क).

---

† फलकामेत्ययं श्लोकः अ, क पुस्तकयोर्न दृश्यते ।

‡ निष्फलेत्ययं श्लोकः क, य, क्ष पुस्तकेषु नास्ति ।

¶ 'न कर्म' इत्येतत्पद्यार्धस्थाने क पुस्तके पाठान्तरं यथा—
'क्रियामात्मानुबद्धायेत्यत्राश्चर्यं किमुच्यताम् ।'

§ एतच्चिह्नान्तर्गतः सार्धैकश्लोकः यथामुद्रितप्रति एकसंख्यात्वेन परिगणितः ।

यथा चित्रप[1]टं[1] स्त्रीणां विलासो नैव बाधते ।
तथाद्वैत[2]क्रियाणां[2] च विलासो नैव बाधते ।। ५० ।।

न प्ररोहन्ति बीजानि यथा भ्रष्टानि भूतले ।
अद्वैतभक्तियुक्तानि कर्माणि च तथैव [3]च[3] ।। ५१ ।।

*यथा वन्ध्याः स्त्रियो लोके फलाय न कदाचन ।
तथाद्वैतक्रिया लोके फलाय न कदाचन ।। ५२ ।।

†अद्वैतभक्तिरूपेण दृश्यन्ते तत्प्रभावतः ।
नैष्फल्यमिति सम्भ्रान्तिस्साफल्यमिति विभ्र[4]म[4]: ।। ५३ ।।

‡ वन्ध्या सकामा यदि पुंसि सङ्गमं
करोत्यकामापि फलं यथा न हि ।
भक्तिसदा सङ्गममीश्वरे मुदा
करोत्यपि स्यात्फलमेव नेतरत् ।। ५४ ।।

न नैष्फल्यं न साफल्यं क्रियाणामस्ति [5]व[5]स्तुतः ।

---

[1] ट (क्ष). [2] त विलांसश्च क्रियाणां (अ, क). [3] हि (अ).
[4] मा: (क). [5] त (अ).

---

* "यथा वन्ध्या" इति पद्यानन्तरं यक्षयो: इमान्यधस्तनानि पद्यानि दृश्यन्ते—

निष्फला निष्फला नैव सफला सफला न हि ।
क्रियाद्वैतसिद्धान्तभक्तियोगसमाश्रिता: ॥

'क' पुस्तके चायमेकश्श्लो दृश्यते यथा—

फलं हि प्रतिबन्धस्स्यात् सुखस्य रतिसङ्गमे ।
तस्मात्पुंसि शिवेनैव वन्ध्याभक्तौ फलागमः ॥

‡एतच्चिह्नान्तर्गतः श्लोकः 'अ क' योर्नास्ति ।
† एतच्चिह्नान्तर्गतो भागः 'क' पुस्तके नास्ति ।

समौ निम्नोन्नतौ नाभिकुचौ चित्रपटे स्त्रि[1]य:[1]: ।
क्रियानैष्फल्यसाफल्ये स[2]त्य[2]द्वैते तथा समे ।। ५४ ।।

यथा नानाविधा नद्यो नानाविधजला अपि ।
स्यन्दमा[3]ना[3] इमास्सर्वा: [4]अकूपारं[4] समाश्रिता: ।। ५५ ।।

*तद्रूपेणैव दृश्यन्ते नाम[5]रूपे[5] विहाय च ।
तथाद्वैतं समाश्रित्य क्रिया नानाविधा अपि ।। ५६ ।।
अद्वैत[6]भक्ति[6]रूपेण दृश्यन्ते भक्तियोगत: ।*

क्रियाकारस्वरूपेण प्रती[7]ताप्ये[7]व सर्व[8]दा[8] ।
न केवलक्रिया ह्यस्य लीलामात्रस्वभावत: ।। ५७ ।।

‡अर्चनार्पणरूपेण तत्सर्वं तु प्रतीयते ।
लीलया सकलाकारा स्वयं सा भक्तिदेवता ।। ५८ ।।

क्रीडन्ती स्वात्मनाऽऽत्मानं भुङ्क्ते चैतच्छिवार्पितम् ।
अनुरागपरा भक्तिर्विषयेषु विशुद्धधीर्विरागपरा ।। ५९ ।।

अनुरागेण विरागेण सन्ततं भक्तिरेव निर्लेपा ।
अन्तर्लेपबहिर्लेपत्यागग्रहणयोस्समा ।। ६० ।।

---

1 या: (अ) 2 त्या (अ). 3 न (अ). 4 पारावारं (अ), अकूपारं न (क्ष). 5 प (अ). 6 तत्व (क). 7 त इ (अ). 8 था (क, य, क्ष).

---

* एतच्चिह्नगत: सार्धश्लोकैकभाग: यथामुद्रितप्रति ५३ संख्याकश्लोकत्वेन गणित: ।

‡ एतच्चिह्नान्तर्गत: 'अर्चना' इत्यारस्य 'स्थिति:' इत्यन्तो भाग 'अ, क' पुस्तकयोर्नास्ति ।

विषयाणां विषयिणां अनुरागविरागिणाम् ।
तस्स.द्भक्तिर्न गृह्णाति न जहाति किमप्यसौ ।। ६१ ।।

अनुरागेण यद्वस्तु विरागेणापि शाम्भवी ।
यथा तमःप्रकाशाभ्यां युक्तोऽप्याकाश एतयोः ।। ६२ ।।

निर्लेपतः स शुद्धात्मा तथा ताभ्यां तयोश्च सा ।
तमो ज्योत्स्नाप्रवृत्तिर्हि रात्रावेव न चाहनि ॥ ६३ ।।

पुण्यपापोभयं कर्ममते भक्तिमते कुतः ।
अहन्यातप एवास्ते तमो ज्योत्स्नाविलक्षणे ।। ६४ ।।

तथा भक्तिपदे शैवं पुण्यपापविलक्षणे ।
अहन्यहस्करो भाति भर्गो भक्तिपदे तयोः ।
प्रभावो ह्यातपस्यैवमित्येतदुभयं मतम् ।। ६५ ।।

ज्ञानैकलक्षणं शैवमुष्णलक्षण आतपः ।
तमश्चन्द्रिकयोस्सख्यमुभयोश्चैक्यलक्षणात् ।। ६६ ॥

रात्रौ व्यवस्थितत्वाच्च तद्वदज्ञानलक्षणात् ।
कर्मण्येव स्थितत्वाच्च सख्यं स्यात्पापपुण्ययोः ।। ६७ ।।

†तस्य द्भक्तिपदे पापपुण्ययोर्नैव वर्तते ।
अत एव परायां तु भक्तौ न च शुभाशुभे ।। ६८ ।।
ज्ञानं प्रसादादेव स्यादित्येषा शाम्भवी स्थितिः ।†

† एतच्चिह्नान्तर्गतः सार्धैकश्लोकः यथामुद्रितप्रति एकश्लोकसङ्ख्यात्वेन गणितः ।

ज्ञानादेव हि मोक्षस्स्यात् मोक्षादुपरि शाम्भवी ।
भक्तिः [1]गुरु[1]तरा भाति स्वतन्त्रा निजलीलया ॥ ६९ ॥

धर्मादिपुरुषार्थानां चतुर्णां परतः प[2]रा[2] ।
पञ्च[3]न:[3] पुरुषार्थो हि भक्तिश्शैवी सनातनी ॥ ७० ॥

लोकयोरुभयोरैहिकामुष्मिकपदार्थयोः ।
गमा[4]गमौ[4] विनैवास्ते भक्तिस्सम्पूर्णवैभवा ॥ ७१ ॥

*भावानुरूपफलदा स्वाश्रितानां फलैषिणाम् ।
उत्तरोत्तररूपेण भक्तिः पूर्णा निरुत्तरा ॥ ७२ ॥

केचित्प्राणैस्सह शिवपदं केचिदात्मीयकार्यैः
केचिद्दारैर्निजतनुभवैः मन्दिरैर्बन्धुवर्गैः ।
ग्रामैर्देशैस्सह परिजनैः केचिदन्ये क्रमेण
त्यक्त्वा चैतत्सकलमपि यान्ति स्वयं चैव भक्ताः ॥ ७३ ॥

प्राणादिवस्तुविषयेष्वनुरागयुक्ता
भक्ताः प्रयान्ति कतिभिस्सह तैश्शिवैक्यम् ।
केचिद्विरागनिरता विषयेषु तेषु
त्यक्त्वा च तान् शिवपदं स्वयमेव यान्ति ॥ ७४ ॥

---

[1] पर (अ, क). [2] रः (अ, क). [3] मं (अ). [4] मं (अ, क).

---

* एतच्चिह्नान्तर्गतः 'भावानुरूप' इत्यारभ्य 'शिवभावकारिणी' इत्यन्तो भागः 'अ, क' पुस्तकयोर्नास्ति ।

भक्तिरेव परमार्थदायिनी
भक्तिरेव परतत्त्ववेदिनी ।
भक्तिरेव भवदोषहारिणी
भक्तिरेव शिवभावकारिणी* ॥ ७५ ॥

†अतःपरं भक्तिविलासवैभवे[1]
सदा शिवाद्वैतपरायणः स्वयम् ।
प्रसादमासाद्य निजैक्यसौख्यदं
स्वमेव गायन् विचरेत्स्वलीलया ॥ ५६ ॥

‡अतत्वसंसारविनाशने सदा
श्रुतिप्रमाणेन च तर्कवर्त्मना ।
प्रबोधमानाश्च शिवस्वरूपं
स्वमेव गायन् विचरेत्पुमान् महीम् ॥ ७७ ॥

ये रुद्रलोकादवतार्य रुद्रा
मानुष्यमाश्रित्य जगद्धिताय ।
चरन्ति नानाविधचारुचेष्टाः
तेभ्यो नमस्त्र्यम्बकपूजकेभ्यः‡ ॥ ७८ ॥

---

[1] वैः (य, क्ष).

---

† एतच्चिह्नान्तर्गतो भागः 'क' पुस्तके न दृश्यते ।

‡ एतच्चिह्नान्तर्गते पद्ये 'अ' पुस्तकमात्रे स्तः ।

*नाहमनात्मा पश्चात्कोऽहं
योऽहं पदस्थ आत्मा साक्षी ।
सोऽहं तत्पतिशिवदासोऽहं
दासोऽहमिति चरेदुपरि पदे † ॥ ७९ ॥

इति परमरहस्यं वेदवेदान्तसारं
हृतभवभय[1]बाधं[1] षट्स्थलब्रह्मबोधम् ।
गुरुशिवपदभक्त्या प्राप्तविद्याय देयं
विरहितघनभक्तिश्रेयसे नैव देयम् ॥ ८० ॥

नाशिष्येभ्य[2]श्शते[2]भ्यो [3]वा[3] नाभक्तेभ्यः कदाचन ।
[4]व्याहरे[4]दीदृशानर्थान् इति वेदानुशासनम् ॥ ८१ ॥

क्रियाविश्रान्तिरित्येवं मया संसारनाशिनी ।
अद्वैतभक्तिनिर्वाणनिष्ठा काष्ठा समीरि[5]ता[5] ॥ ८२ ॥

§ श्रीमदैपुरसोमेशलिङ्गाय लिङ्गरूपिणे ।
लिङ्गाङ्गैक्यस्वरूपाय नमस्ते लिङ्गमूर्तये ॥ ८३ ॥

नमश्शब्द उमा साक्षाच्छिवशब्दः शिवस्स्वयम् ।
अयशब्दस्तयोर्योगः सोमतत्त्वमुपास्महे ॥ ८४ ॥

---

1 दूरं (अ). 2 श्रते (अ), श्रैते (य, क्ष). 3 ऽपि (अ). 4 व्याहारेनी (अ), माह्य (य, क्ष). 5 तः (क).

---

* नाहमात्मेति पद्यस्यादौ उपजातिवृत्तमिति 'अ' पुस्तके वृत्तनिर्देशः कृतः ।

§ एतच्चिह्नान्तर्गतो भागः 'क्षक' योर्नास्ति । अथापि सिद्धान्तसारनिर्वचनरूपत्वादस्येह सिद्धपाठत्वेन स्वीकारः कृतः ।

अवाच्यात्मस्वरूपाय शिवभावप्रदायिने ।
नमस्सद्गुरुनाथाय षट्स्थलब्रह्ममूर्तये ।। ८५ ।। §

स्वानुभूतिविभवावगाहिना
मायिदेवविभुना महात्मना ।
श्रीशिवानुभवसूत्रमुत्तरं
तन्त्रमुक्तमतिशोभनं परम् ।। ८६ ।।

एतद्यो वेद सोऽविद्याग्रन्थिं विकिरति प्रभुः ।
शिवसिद्धान्तकं तन्त्रं शिवाद्वैतं शिवं पदम् ।। ८७ ।।

[1]इति श्रीवातुलोत्तरतन्त्रे शिवसिद्धान्ततन्त्रे अनुभवसूत्रे षट्स्थलनिर्णये[1] क्रियाविश्रान्तिर्नाम अष्टमाधिकरणं सम्पूर्णम्

———o———

[1] इत्यऽनुभवसूत्रे शिवसिद्धान्ततन्त्रे षट्स्थलनिर्णये (अ, क), इति वातुलोत्तरतन्त्रे षट्स्थलनिर्णये (य), इति शिवानुभवसूत्रे षट्स्थलनिर्णये शिवसिद्धान्ततन्त्रं (क्ष).

# अनुभवसूत्रसूची

## अ

11

